(४) अथचक्रवर्तिलक्षणानामनुगमप्रकारः। (पृ. १०६-पं. ९)

[१] (क) अत्र व्याप्यवृत्तित्वं निरवच्छिन्नहेत्वधिकरणत्वम्। हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्त्यभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यदभावव्यक्तित्वं तत्त्वमिति जागदीशी। (पृ. ११ प. १)। अस्यानुगमः। हेत्वधिकरणविशिष्टसाध्याभाववत्त्वमिति। वैशिष्ट्यं च स्ववृत्त्यभावप्रतियोगितावत्त्वसम्बन्धेन। प्रतियोगितावत्त्वं च स्वावच्छेदकत्व-स्वसामानाधिकरण्योभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन। तथाच संयोगत्वस्य गुणकर्महेत्वधिकरणविशिष्टसंयोगाभावत्वनिरूपितप्रतियोगितावच्छेदकतया संयोगी सत्त्वादित्यादौ नातिव्याप्तिरिति ध्येयम्॥ १३॥

[२] (क) हेत्वधिकरणत्वव्यापकप्रतियोगिताभिन्नप्रतियोगिताभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमिति चक्रवर्तिद्वितीयलक्षणसमुदितार्थः। हेत्वधिकरणत्वव्यापकताघटकसम्बन्धश्च स्वविशिष्टधर्मावच्छिन्नाधिकरणत्वम्। स्ववैशिष्ट्यं च स्वावच्छेदकत्व-स्वसामानाधिकरण्योभयसम्बन्धेन। प्रतियोगित्वाभावश्च स्वावच्छेदकत्व-स्वसामानाधिकरण्योभयसम्बन्धावच्छिन्नप्रतियोगिताकः॥ १४॥

(ख) वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वे तादृशप्रतियोगिताविशिष्टसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमित्यर्थो भाव्यः। तादृशप्रतियोगिताविशिष्ट्यं च स्वावच्छेदकत्वस्वसामानाधिकरण्योभयसंसर्गावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन, अतोनानुगमः॥ १५॥

[३](च) प्रतियोगिताविशिष्टप्रतियोगिताश्रयाभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यम् इति चक्रवर्तितृतीयलक्षणसमुदितार्थः। प्रतियोगितावैशिष्ट्यं च स्वविशिष्टप्रतियोगिताकभेदवद्धेत्वधिकरणकत्व-स्वतादात्म्योभयसम्बन्धेन। स्ववैशिष्ट्यं च स्वावच्छेदकावच्छिन्नाधिकरणत्वावच्छिन्नत्व-स्वाश्रयाधिकरणनिष्ठत्वोभयसम्बन्धेन। आश्रयत्वं च स्वविशिष्टप्रतियोगिताकत्वसम्बन्धेन। वैशिष्ट्यं च स्वसामानाधिकरण्याधिकरणवृत्तित्वावच्छिन्नत्व-स्वावच्छेदकतावृत्तित्वोभयसम्बन्धेन इति नानुगमवार्तापीति। वह्निमान् धूमादित्यादौ तु घटत्वेन पटाभावप्रतियोगित्वमादाय लक्षणसमन्वय इति सुधीभिरवधेयम्॥ १६॥

(छ) चक्रवर्तितृतीयलक्षणे यादृशप्रतियोगित्वमनतिरिक्तधर्मावच्छिन्नं, तच्च स्वसमानाधिकरणत्वे सति स्वाभाववदवृत्तित्वम्। अत्र समवायेन प्रमेयसाध्यकव्यभिचारिण्यतिव्याप्तिः, प्रमेयाभावीयप्रतियोगिताया अभावाप्रसिद्ध्या तादृशाभावस्य लक्षणाघटकत्वात्। तस्यार्थः—स्वसामानाधिकरण्य-स्वाभाववदवृत्तित्वोभयसम्बन्धावच्छिन्नतादृशप्रतियोगित्वाभाववद्धर्मावच्छिन्नत्वामत्यर्थः॥१७॥

(ज) अथवा यत्किञ्चिद्धर्मविशिष्टान्यत्वम्। वैशिष्ट्यं च स्वसामानाधिकरण्य-स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्व-स्वनिष्ठावच्छेदकतानिरूपितत्व-एतत्त्रितयसम्बन्धेन॥ १८॥

(झ) चक्रवर्तिप्रथमलक्षणानुगमस्तु हेतुसमानाधिकरणसाध्याभावपदेन धर्मविशिष्टान्यप्रतियोगिताकाभाव एव निवेशितः। धर्मपदं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकपरम्। प्रतियोगितायां धर्मवैशिष्ट्यं च स्वावच्छिन्नवद्वृत्त्यभावीयत्व-स्वावच्छिन्नत्व-स्वसामानाधिकरण्य-एतत्त्रितयसम्बन्धेन। यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगित्वमपि एतत्त्रितयस-

म्बन्धेन । धर्मविशिष्टान्यत्वं यद्धर्मसमानाधिकरणप्रतियोगित्वं तदनवच्छेदकं यद्धेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं तदेव परिभाषिकावच्छेदकमिति निष्कृष्टार्थः । यद्धर्मपदं परिभाषिकावच्छेदकत्वेनाभिमतपरम् ॥ १९ ॥

[४] ( क ) चक्रवर्तिलक्षणस्य वस्तुत ( पृ० १२७ पं० १ जाग० ) इत्यादिकल्पे न च निरुक्तप्रतियोगित्वातिरिक्त वृत्तियत्तदन्यतादृशप्रतियोगितावच्छेदकाप्रसिद्ध्या घटवान् महाकालत्वादित्यत्राव्याप्तिसम्भवे सामानाधिकरण्यदलवैयर्थ्यदानमनुचितमिति वाच्यम्। स्ववृत्तित्व-स्वावच्छेदकत्वस्वसामानाधिकरण्यएतत्त्रितयसम्बन्धेन तादृशप्रतियोगित्वाभावस्य साध्यतावच्छेदके विवक्षणात् । घटत्वेन पराभावमादायैवैतल्लक्षणगमनात् स्वं-प्रतियोगिता । स्ववृत्तित्वं च स्वसमानाधिकरणाभावप्रतियोगित्वस्वसामानाधिकरण्यएतदुभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन । तेन सम्बन्धघटकसामानाधिकरण्यपदादाने लक्षणस्यसामानाधिकरण्यदलवैयर्थ्यम्, न तत्राव्याप्तिः प्रमेयसाध्यकव्यभिचारिणेतिव्याप्तिमेति विभावनीयम् ॥ २० ॥

## (५)अथ साजात्यघटितलक्षणानामनुगमप्रकारः । ( पृ. १५७ पं. १ )

[१] (अ) साजात्यघटितप्रथमलक्षणानुगमः प्रत्येकपदादानेऽपि सम्भवति, तथाहि हेतुसमानाधिकरणसाध्याभावत्वव्यापकहेतुतावच्छेदकत्वं व्याप्तिरित्यर्थः । अत्र तु व्यापकत्वं स्वसमानाधिकरणहेतुसमानाधिकरणसाध्याभाववद्वृत्तितात्वव्यापकप्रतियोगिताकाभावसजातीयत्वसम्बन्धेन नातोऽव्याप्त्यतिव्याप्ती । अत्र च स्वं हेतुतावच्छेदकधर्मपरम् । तथाच प्रत्येकपदं निवेश्य एकरूपेणानुगमोऽसङ्गत इति चेन्न । तस्य लक्षणान्तरत्वेनोक्तलक्षणस्यादुष्टत्वादिति सुधीभिर्भाव्यम् ॥ २१ ॥

( आ ) प्रकारान्तरम् । साध्याभावत्वव्यापकहेतुत्वम् । व्यापकत्वं च आधेयतासम्बन्धेन । आधेयत्वं च स्वविशिष्टनिरूपिताधिकरणत्वसम्बन्धावच्छिन्नं ग्राह्यम् । वैशिष्ट्यं च स्वसजातीयत्वस्वाधिकरणवृत्तितात्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वोभयसम्बन्धेनेति ॥ यथाश्रुतग्रन्थानुरोधिनस्तु साध्याभावविशिष्टाभावत्वव्यापकत्वम् । व्यापकत्वं च आधेयतासम्बन्धेन । वैशिष्ट्यं च स्वसजातीयत्व-स्वाधिकरणवृत्तितात्वावच्छिन्नप्रतियोगिताकत्वोभयसम्बन्धेनेति ॥ २२ ॥

[२] (क) ( पृ. १७७पं. १ ) साजात्यघटितद्वितीयलक्षणानुगमस्तु साध्याभावत्वव्यापकं यद्धर्मावच्छिन्नव्यापकतावच्छेदकवृत्तित्वं तद्धर्मवत्त्वं व्याप्तिः । वृत्तित्वं च साध्याभावविशिष्टाभावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नत्वम् । वैशिष्ट्यं च स्वव्यापकत्व स्ववृत्तित्वान्यतरधर्मवत्त्वोभयसम्बन्धेनेति बोध्यम् ॥ २३ ॥

## ( ६ ) सार्वभौमीयलक्षणानुगमप्रकारः । पृ. १६१ पं. १ )

( क-१ ) वृत्तिमद्वृत्तयो यावन्तः साध्याभावाधिकरणेत्यादिकूटघटितलक्षणस्यानुगमस्तु-हेतुतावच्छेदकसंसर्गविशिष्टप्रतियोगितावत्प्रतियोगिताविशिष्टाभावत्वव्यापकहेतुतावच्छेदकधर्मवत्त्वम् । अभावे हेतुतावच्छेदकसंसर्गवैशिष्ट्यं च स्वावच्छिन्नवृत्तिप्रभिघ्रत्वसम्बन्धेन । प्रतियोगितायां प्रतियोगितावत्त्वं च स्वावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणतावच्छिन्नाभावप्रतियोगितासमानाधिकरणत्वविशिष्टावच्छेदकत्वसम्बन्धावच्छिन्नत्वनिष्ठावच्छे-

रु० आ०

माधुरीपञ्चलक्षणी सिंहव्याघ्रलक्षण सहिता। श्रीउमानाथकृत व्याख्या सहिता। ०—६

जागदीशीयपञ्चलक्षण्या सिंहव्याघ्रलक्षणयोश्च क्रोडपत्रम्। श्रीकालिशङ्करप्रणीतम्। ०—३

व्याप्तिपञ्चकम् सिंहव्याघ्रलक्षण च। ( श्रीजगदीशतर्कालङ्कारकृतम् ) न्यायाचार्य पं० श्रीशिवदत्तमिश्रविरचितगङ्गानिर्झरिणी व्याख्यया संवलितम्। संस्कृतटिप्पण्यादिभिर्विभूषितं च। ०—८

सिद्धान्तलक्षणम्। श्रीरघुनाथशिरोमणि, श्रीजगदीशभट्टाचार्य, श्रीमथुरानाथ तर्कवागीशविरचितेन टीकात्रयेण जागदीश्याः क्रोडपत्रेण च समन्वितम्। ०—१२

जागदीशीसिद्धान्तलक्षणस्यक्रोडपत्रम्। श्रीकालीशङ्करप्रणीतम्। ०—१०

जागदीशीसामान्यनिरुक्तिविशेषव्याप्तिः मूलदीधिति सहित। श्रीयुत म० म० पं० वामाचरणभट्टाचार्य कृत क्रोडपत्रयुतः च। १—४

न्यायसिद्धान्तमञ्जरी। भट्टाचार्यचूडामणिजानकीनाथ विरचिता। पं० श्री निलकण्ठदीक्षितप्रणीतवृहत्तकप्रकाशाभिधया व्याख्या समेता। १—८

उभयाभावादिवारकपरिष्कार। श्रीलोकनाथशर्मप्रणीत। पं० श्रीबालकृष्ण-मिश्रविरचितप्रकाशाख्यविवरणसमेत.। ०—१२

३१ तर्कसंग्रहः। अन्नभट्टप्रणीत। बुधिप्रवरगोवर्धनाचार्यविरचितया 'न्यायबोधिन्या' मनिषिप्रकाण्डचन्द्रजसिंहकृतन "पदकृत्येन" न्यायोपाध्याय ... दुण्डिराजशास्त्रिविरचितया "विरलया" च सहित। सटिप्पण।

३२ न्यायमञ्जरी। श्रीजयन्तभट्टकृता। सपूर्ण। ...

३३ न्यायमञ्जरी। „ शास्त्रिपरीक्षोपयोगि प्रमेयप्रकरण...

३४ न्यायकुसुमाञ्जलिः। न्यायाचार्य श्रीमदुदयन... भट्टाचार्य्यकृत व्याख्योपेत। म० म० ... टिप्पण्या समलङ्कृत।

३५ न्यायकुसुमाञ्जलिः। न्याया... रुचिदत्तकृतमकरन्दोद्भासि... ०—८

३६ तर्कभाषा। श्रीके...

7 The TA... ...ing.
T... ...a Nath
Rs 1—4

०—६